जम्बुदीवे २ भरहे वासे तीताते उस्सप्पिणीते दस कुलगरा हुत्था, तं—"सयज्जले सयाऊ य अणंतसेणे त अमितसेणे त। तक्कसेणे भीमसेणे महाभीमसेणे त सत्तमे ॥१॥ दढरहे दसरहे सयरहे ॥ जम्बुदीवे २ भारहे वासे आगमीसाते उस्सप्पिणीए दस कुलगरा भविस्संति, तं०—सीमंकरे सीमंधरे खेमंकरे खेमंधरे विमलवाहणे संमुती पडिसुते दढधणू दसधणू सतधणू। (सू० ७६७) जम्बुदीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं सीताते महानतीते उभतो कूले दस वक्खारपव्वता पं० तं०—मालवंते चित्तकूडे विचित्तकूडे बंभकूडे जाव सोमणसे। जम्बुमंदरपच्चत्थिमे णं सीओताते महानतीते उभतो कूले दस वक्खारपव्वता पं० तं०—विज्जुप्पभे जाव गंधमातण, एवं धायइसंडपुरच्छिमद्धेवि वक्खारा भाणिअव्वा जाव पुक्खरवरदीवद्धपच्चत्थिमद्धे (सू० ७६८) दस कप्पा इंदाहिट्ठिया पं० तं०—सोहम्मे जावसहस्सारे पाणते अच्चुए, एतेसु णं दससु कप्पेसु दस इंदा पं०तं०—सक्के ईसाणे जाव अच्चुते, एतसु णं दसण्हं इंदाणं दस परिजाणितविमाणा पं० तं०—पालते पुप्फए जाव विमलवरे सव्वतोभद्दे (सू० ७६९)।

'जम्बुद्दीवे'त्यादि सूत्रद्वयं कण्ठ्यं नवरं 'तीयाए'त्ति अतीतायां 'उस्सप्पिणीए'त्ति उत्सर्पिण्यां कुलकरणशीलाः कुलकराः—विशिष्टबुद्धयो लोकव्यवस्थाकारिणः पुरुषविशेषाः, 'आगमिस्साए'त्ति आगमिष्यन्त्यां, वर्त्तमाना तु अवसर्पिणी सा च नोक्ता, तत्र हि सप्तैव कुलकराः, क्वचित्पञ्चदशापि दृश्यन्त इति। पुष्करार्द्धक्षेत्रस्वरूपमभिहितं प्रागतः क्षेत्राधिकारादेव कल्पानाश्रित्य दशकमाह—'दसे'त्यादि, सौधर्मादीनामिन्द्राधिष्ठितत्वमेतेष्विन्द्राणां निवासादानतारणयोस्तु तदनधिष्ठितत्वं तन्निवासाभावात्, स्वामितया तु